अदः अमू अमूनि । पुनरप्येवं अन्यत्र पुल्लिङ्गवत् ॥ हकारान्तोऽप्रसिद्धः । इत्यादि ॥

इति व्यञ्जनान्ता नपुंसकलिङ्गाः ।

---

## अथ व्यञ्जनान्तेष्वलिङ्गेषु युष्मदस्मदौ उच्येते ।

युष्मद्सि अस्मद्सि इतिस्थिते ।

**त्वन्मदोरेकत्वे** ॥ ३५२ ॥ एकत्वे वर्तमानयोर्युष्मदस्मदोः स्थाने त्वन्मदौ भवतः ।

**त्वमहं सौ सविभक्त्योः** ॥ ३५३ ॥ युष्मदस्मदोः सविभक्त्योस्त्वमहमित्येतौ भवतः सौ परे । त्वं । अहं ।

**युवावौ द्विवाचिषु** ॥ ३५४ ॥ युष्मदस्मदोः युवावौ द्विवाचिषु भवतः । अन्तलोपे सति ।

**अमौ चाम्** ॥ ३५५ ॥ युष्मदादिभ्यः परः अम् औ च आम् भवति । सवर्णदीर्घः । युवां । आवां ।

**यूयं वयं जसि** ॥ ३५६ ॥ युष्मदस्मदोः सविभक्त्योर्यूयं वयमित्येतौ भवतः जसि परे । यूयं । वयं । त्वन्मदोरेकत्वे इति त्वत् अम् । मत् अम् इति स्थिते ।

**एषां विभक्तावन्तलोपः** ॥ ३५७ ॥ एषां युष्मदादीनां अन्तस्य लोपो भवति विभक्तौ परतः । सवर्णे दीर्घः । त्वां । मां । युवां आवां ।

**आन् शसः** ॥ ३५८ ॥ युष्मदादिभ्यः परस्य शसः आन् भवति । युष्मान् । अस्मान् ।

**एत्वमस्थानिनि** ॥ ३५९ ॥ युष्मदादीनामन्तस्य एत्वं भवत्यस्थानिनि अनादेशिनि प्रत्यये परे । त्वया । मया ।

**आत्वं व्यञ्जनादौ** ॥ ३६० ॥ युष्मदादीनामन्तस्य आत्वं

भवति व्यञ्जनादौ विभक्तौ आदेशवर्जिते प्रत्यये परे । युवाभ्यां । आवाभ्यां । युष्माभिः । अस्माभिः ।

**तुभ्यं मह्यं ङयि** ॥ ३६१ ॥ युष्मदस्मदोः सविभक्त्योः तुभ्यं मह्यमित्येतौ भवतो ङयि परे। तुभ्यं मह्यं । युवाभ्यां । आवाभ्यां ।

**भ्यसभ्यम्** ॥ ३६२ ॥ एभ्यो युष्मदादिभ्यः परो भ्यस् अभ्यं भवति । युष्मभ्यं । अस्मभ्यं ।

श्लोकः ।

आदिलोपोऽन्त्यलोपश्च मध्यलोपस्तथैव च ॥
विभक्तिपदवर्णानां दृश्यते शार्ववर्मिके ॥ १ ॥

**अत् पञ्चम्यद्वित्वे** ॥ ३६३ ॥ एभ्यो युष्मदादिभ्यः परा अद्वित्वे वर्तमाना पञ्चम्यद् भवति। त्वत् । मत् । युवाभ्यां। आवाभ्यां । युष्मत् । अस्मत् ।

**तव मम ङसि** ॥ ३६४ ॥ युष्मदस्मदोः सविभक्त्योस्तव मम इत्येतौ भवतो ङसि परे । तव मम । युवयोः । आवयोः ।

**सामाकम्** ॥ ३६५ ॥ एभ्यो युष्मदादिभ्यः परः सागमयुक्त आम् आकम् भवति । युष्माकं । अस्माकं । त्वयि मयि युवयोः आवयोः युष्मासु अस्मासु । एवं नीतकः । त्वं युवां यूयं । त्वां युवां युष्मान्। त्वया युवाभ्यां युष्माभिः । तुभ्यं युवाभ्यां युष्मभ्यं। त्वत् युवाभ्यां युष्मत् । तव युवयोः युष्माकं। त्वयि युवयोः युष्मासु ॥ अहं आवां वयं । मां आवां अस्मान् । मया आवाभ्यां अस्माभिः । मह्यं आवाभ्यां अस्मभ्यं । मत् आवाभ्यां अस्मत् । मम आवयोः अस्माकं। मयि आवयोः अस्मासु ॥ ग्रामो युष्माकं । ग्रामोऽस्माकं । स ग्रामो युष्मभ्यं दीयते । ग्रामोऽस्मभ्यं दीयते । ग्रामो युष्मान् रक्षति । ग्रामोऽस्मान् रक्षति । इति स्थिते ।

**युष्मदस्मदोः पदं पदात्षष्ठीचतुर्थीद्वितीयासु वस्नसौ** ॥ ३६६ ॥ पदात्परं युष्मदस्मदोः पदं षष्ठीचतुर्थीद्वि-

तीयासु बहुत्वे निष्पन्नं वसूनसावापद्यते यथासंख्यं । ग्रामो वः स्वं । ग्रामो नः स्वं । ग्रामो वो दीयते । ग्रामो नो दीयते । ग्रामो वो रक्षति। ग्रामो नो रक्षति ।इति सिद्धं ॥ ग्रामः युवयोः स्वं । ग्राम आवयोः स्वं।ग्रामो युवाभ्यां दीयते । ग्राम आवाभ्यां दीयते । ग्रामो युवां रक्षति । ग्राम आवां रक्षति । इति स्थिते ।

**वान्नौ द्वित्वे** ॥ ३६७ ॥ पदात्परं युष्मदस्मदोः पदं षष्ठीचतुर्थीद्वितीयासु द्वित्वे निष्पन्नं वान्नौ आपद्यते। यथासंख्यं । ग्रामो वां स्वं । ग्रामो नौ स्वं । ग्रामो वां दीयते।ग्रामो नौ दीयते।ग्रामो वां रक्षति।ग्रामो नौ रक्षति ॥ ग्रामस्तव स्वं । ग्रामो मम स्वं । ग्रामस्तुभ्यं दीयते । ग्रामो मह्यं दीयते । ग्रामस्त्वां रक्षति । ग्रामो मां रक्षति । इति स्थिते ।

**त्वन्मदोरेकत्वे तेमे त्वामा तु द्वितीयायां** ॥३६८॥ युष्मदस्मदोरेकत्वे त्वन्मदीभूतयोः पदं पदात्परं षष्ठीचतुर्थीद्वितीयासु एकत्वे निष्पन्नं ते मे आपद्यते त्वा मा तु द्वितीयायां । ग्रामस्ते स्वं । ग्रामो मे स्वं । ग्रामस्ते दीयते । ग्रामो मे दीयते । ग्रामस्त्वा रक्षति । ग्रामो मा रक्षति । इति सिद्धं ।

**न पादादौ** ॥ ३६९ ॥ पादस्यादौ वर्तमानानां युष्मदादीनां पदमेतानादेशान्न प्राप्नोति ।

श्लोकः ।

वीरो विश्वेश्वरो देवो युष्माकं कुलदेवता ।
स एव नाथो भगवानस्माकं पापनाशनः ॥ १ ॥
भगवानीश्वरो भूयाद्युष्माकं वरदः प्रभुः ।
सद्यो निराकृता दूरमस्माकं येन विद्विषः ॥ २ ॥

पादादाविति. क्रि ।. पान्तु वः पार्वतीनाथमौलिचन्द्रमरीचयः ।.

**आमन्त्रणात्** ॥ ३७० ॥ आमन्त्रणातपरं युष्मदादीनां पदमेतानादेशान्न प्राप्नोति । हे पुत्र तव स्वमिदं । हे पुत्र मम स्वमिदं ।

हे पुत्र तुभ्यं स्वमिदं दीयते । हे पुत्र मह्यं स्वमिदं दीयते । हे पुत्र त्वां रक्षति । हे पुत्र मां रक्षति ।

**चादियोगे च ॥ ३७१ ॥** चादीनां योगे युष्मदादीनां पदमेतानादेशान्न प्राप्नोति । पुत्रो युष्माकं च । पुत्रोऽस्माकं च । पुत्रो युष्मभ्यं च दीयते । पुत्रोऽस्मभ्यं च दीयते । पुत्रो युष्मांश्च रक्षति । पुत्रोऽस्मांश्च रक्षति । चादयः कति । पञ्च । ते के । च वा ह अह एव इति चादयः ।

**दृश्यार्थैश्चानालोचने ॥ ३७२ ॥** अचक्षुरालोचने वर्तमानैर्दृश्यार्थैर्धातुभिर्योगे युष्मदस्मत्त्वन्मदादीनां वसुनसादयो न भवन्ति । अनालोचनमिति किम् । आलोचनं चक्षुर्ज्ञानमनालोचनं मनसा ज्ञानं । ग्रामस्त्वां समीक्षते । ग्रामो मां समीक्षते । ग्रामो युष्मभ्यं दीयमानः समीक्षते । ग्रामोऽस्मभ्यं दीयमानः समीक्षते । ग्रामस्त्वां मनसा विलोकयति वाञ्छतीत्यर्थः । मनसेति किं । ग्रामो वः पश्यति । ग्रामो नः पश्यति चक्षुषेत्यर्थः ।

इत्यलिङ्गाः ।

## अथाव्ययान्युच्यन्ते ॥

अव्ययमसंख्यं । तानि कानि । स्वर् प्रातर् पुनर् अन्तर् बहिर्, च, वा, ह, अह, एव, प्र, परा, अप, सम्, अनु, अव्, निर्, दुर्, वि, आङ्, नि, अति, अपि, अधि, सु, उत्, अभि, प्रति, परि, उप, इत्यादि, प्रादयो विंशतिः । विना, नाना, अन्तर्, नो, अथ, अथो, अहो, पृथक्, यावत्, तावत्, मनाक्, वषट्, ईषत्, हि, यदि, खलु, ननु, तिर्यक्, मिथ्या, किल, हन्त, वै, तु ।

**अव्ययाच्च ॥३७३॥** अव्ययाच्च परासां विभक्तीनां लुग्भवति ।

श्लोकः ।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।

वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥

इत्यव्ययानि ।

## अथ प्रत्यया उच्यन्ते ।

**अव्ययसर्वनाम्नः स्वरादन्त्यात्पूर्वोऽक्** ॥ ३७४ ॥ अव्ययानां सर्वनाम्नां चान्त्यात्स्वरात्पूर्वोऽक्प्रत्ययो वा भवति कप्रत्ययश्च बहुलं । बहुलमिति किं ।

श्लोकः ।

क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः
क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य
चतुर्विधं बाहुलकं वदन्ति ॥ १ ॥

उच्चकैः । उच्चैः । नीचकैः । नीचैः । सर्वे सर्वके । विश्वे विश्वके । युष्मकाभिः । अस्मकाभिः । एभिः । इमके । अमीभिः । अमुके । भवन्तः भवन्तकः ।

**विभक्तेश्च पूर्व इष्यते** ॥ ३७५ ॥ विभक्तेश्च पूर्वोऽक्प्रत्ययो वा इष्यते । त्वया त्वयका । मया मयका ।

**आख्यातस्य चान्त्यस्वरात्** ॥ ३७६ ॥ आख्यातस्य चान्त्यस्वरात्पूर्वोऽक्प्रत्ययो वा भवति । पचति पचतकि । भवन्ति भवन्तकि । गच्छन्ति गच्छन्तकि । इत्यादि । कप्रत्ययश्च । यावकः । यामकः । मणिकः । वत्सकः । पुत्रकः । अश्वकः । वृक्षकः । देवदत्तकः । इत्यादि ।

**के प्रत्यये स्त्रीकृताकारपरे पूर्वोऽकार इकारम्** ३७७ के प्रत्यये स्त्रीकृताकारे परे पूर्वोऽकार इकारमापद्यते । सर्विका । विश्विका । उष्ट्रिका । पूर्विका । पाचिका । मूषिका । कारिका । पाठिका । इत्यादि ।

**नदाद्यञ्च्वाहुर्यसन्तृसखिनान्तेभ्य ई ॥ ३७८ ॥** स्त्रियां वर्तमानेभ्यो नदादि अञ्च् वाह् उ इ अंस् अन्त् ऋ सखि नान्तेभ्य ई प्रत्ययो भवति ।

**ईकारे स्त्रीकृतेऽलोप्यः ॥ ३७९ ॥** स्त्रियां वर्तमाने ई प्रत्यये परे पूर्वोऽकारो लोप्यो भवति । नदी मही मषी क्षुवी कुमारी किन्नरी किशोरी प्रभृतयः । अञ्च् । प्राची प्रतीची समीची उदीची तिरश्चीत्यादि । वाह् । अनडुही वास्त्रीकारे अनड्वाही प्रष्ठौही इत्यादि । उ । तन्वी । उर्वी । पृथ्वी । पट्वी । इ । दाक्षी । दैवदत्ती । धूली । अंस् । श्रेयन्स् श्रेयसी विदुषी प्रेयसी । अन्त् ।

**तुदभादिभ्य ईकारे ॥ ३८० ॥** तुदादिभ्यो भादिभ्यश्च परो अन्तिरनकारको वा भवति ईप्रत्यये परे । तुदती तुदन्ती स्त्री । भाती भान्ती स्त्री ।

**स्यात् ॥ ३८१ ॥** स्यात्परोऽन्तिरनकारको वा भवति ई प्रत्यये परे । भविष्यती । भविष्यन्ती ।

**न यनन्भ्यां ॥ ३८२ ॥** यन् अन् विकरणाभ्यां परोऽन्तिरनकारको न भवति ईकारे परे । दीव्यन्ती सीव्यन्ती पचन्ती गच्छन्ती स्त्री इत्यादि । न यनन्भ्यामिति किं । सुन्वती तन्वती क्रीणती सती आयुष्मती धनवती इत्यादि । ऋ । कर्त्री हर्त्री भर्त्री क्रोष्ट्री इत्यादि । सखि । सखी । नान्तात् । दण्डिनी गोमिनी तपस्विनी यशस्विनी प्रभृतयः ।

**स्त्रीकारे नित्यमवमसंयोगादनोऽलोपोऽलुसवच्च पूर्वविधौ ॥ ३८३ ॥**[1] अवमसंयोगादनोऽलोपो नित्यं भवति स्त्रीकारे परे । राज्ञी गोमिनी तपस्विनी यशस्विनी प्रभृतयः ।

**वरुणेन्द्रमृडभवशर्वरुद्रादान् ॥ ३८४ ॥** एभ्यः परो आन्

---

१ स्त्रीकारे नित्यं ॥ ३८३ ॥ अवमसंयोगादनोऽलोपो नित्यं भवति स्त्रीकारे परे सवालुसवद्भवति पूर्वस्यवर्णस्य विधौ कर्तव्ये । राज्ञी । इति समीचीनं दृश्यते ।

प्रत्ययो भवति। तेभ्यश्च ई प्रत्यय । वरुणानी शर्वाणी मृडानी इन्द्राणी इत्यादि ।

**नान्तसंख्यास्वस्रादिभ्यो न॥३८५॥** नान्तेभ्य सख्यादिभ्य स्वस्रादिभ्यश्च ईप्रत्ययो न भवति।पञ्चदश। तिस्र । चतस्र । आदिशब्दात् सीमा दामा । बहवो राजानो यस्या पुर्या सा बहुराजा । स्वसा माता दुहितेत्यादि ।

इति प्रत्ययान्ता ॥

## अथ कारकं किञ्चिदुच्यते ।

कि कारक ? करोति क्रिया निर्वर्तयतीति कारक। कस्मिन्नर्थे प्रथमा विभक्ति । कर्तरि प्रथमा । क कर्ता ।

**यः करोति स कर्ता ॥३८६॥** य क्रिया करोति स कर्तृसज्ञो भवति । देवदत्त करोति । मुनिरधीते । यज्ञदत्तौ लुनीत । यती पठत । विष्णुमित्रा गच्छन्ति । साधवोऽनुतिष्ठन्ति । इत्यादि । कस्मिन्नर्थे द्वितीया ? कर्मणि द्वितीया । कि कर्म ?

**यत्क्रियते तत्कर्म ॥ ३८७ ॥** कर्त्रा यत्क्रियते तत्कारक कर्मसज्ञ भवति। कुम्भ करोति । काष्ठ छिनत्ति । मार्गं रुणद्धि । स्तनौ पिबति । गुरून् वन्दते । इत्यादि ।

**द्वितीयैनेन ॥३८८॥** एन प्रत्ययान्तेन योगे लिङ्गाद्द्वितीया भवति।

**अदूरे एनोऽपञ्चम्या दिग्वाचिनः ॥३८९॥** अदूरार्थे दिग्वाचिन पर एनप्रत्ययो भवति अपञ्चम्या । अपञ्चम्या इति कोऽर्थ । षष्ठ्यर्थे द्वितीया भवतीत्यर्थ । इवर्णावर्णयोर्लोप स्वरे प्रत्यये ये च इत्यवर्णलोप । अदूरवर्तिन्या पूर्वस्या दिशीत्यर्थ ॥ पूर्वेण ग्राम । उत्तरेण गिरिं । दक्षिणेन नदीं । पश्चिमेन केदारमित्यादि । चकाराभिव्याप्तसमयाहाधिगन्तरान्तरेणयुक्तात् लिङ्गाद् द्वितीया भवति। निकषा ग्राम । समया वनम् । हा देवदत्तम् । धिग् यज्ञदत्त । अन्तरा गार्हपत्यमाहवनीय च वेदि । अन्तरेण पुरुषाकार न किञ्चिल्लभते।

**सर्वोभयाभिपरिभिस्तसन्तैः** ॥३९०॥ तसन्तै सर्वादिभिर्योगे लिङ्गाद्विनीया भवति । सर्वतो ग्राम वनानि । उभयतो ग्राम क्रमुकवनानि । अभितोग्राम पत्रवनानि । परितोग्राम रभावनानि ।

**कर्मप्रवचनीयैश्च** ॥ ३९१ ॥ कर्मप्रवचनीयैर्योगे लिङ्गाद् द्वितीया भवति । के कर्मप्रवचनीया ।

## श्लोकः ।

लक्षणवीप्सेत्थंभूतेऽभिर्भागे च परिमती ।
अनुरेषु सहार्थे च हीने चोपश्च कथ्यते ॥ १ ॥

लक्षणार्थे वीप्सार्थे इत्थभूतार्थे अभिशब्द कर्मप्रवचनीयो भवति । भागे च परिप्रती कर्मप्रवचनीयौ भवत ॥ चशब्दात् । लक्षणार्थे वीप्सार्थे इत्थभूतार्थे परिप्रती कर्मप्रवचनीयौ भवत । अनुशब्द एपु पूर्वोक्तेपु अर्थेपु कर्मप्रवचनीयो भवति । सहार्थे च। चशब्द समुच्चयार्थ । हीनार्थे उपशब्द कर्मप्रवचनीयो भवति ॥ च शब्दात् हीनार्थे अनुशब्द कर्मप्रवचनीयो भवति । लक्षणार्थे वृक्षमभि विद्योतते विद्युत् । वीप्सार्थे वृक्ष वृक्षमभितिष्ठति विद्युत् । इत्थभूतार्थे साधुर्देवदत्तो मातरमभि । वृक्ष परि विद्योतते विद्युत् । वृक्ष प्रति तिष्ठति । वृक्ष वृक्ष प्रति तिष्ठति । साधु देवदत्तो मातर परि । साधु देवदत्तो मातर प्रति । यदत्र मा परि स्यात् । तदत्र मा प्रति स्यात् । वृक्षमनु विद्योतते विद्युत् । वृक्ष वृक्षमनुतिष्ठति । साधु देवदत्तो मातरमनु । यदत्र मामनु स्यात् । पर्वतमनु वसते सेना । अन्वर्जुन योद्धार । उपार्जुन योद्धार । अर्जुनादन्ये योद्धारो निकृष्टा इत्यर्थ ।

**गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि** ॥ ३९२ ॥ चेष्टाक्रियाणा गत्यर्थाना धातूना प्रयोगेऽध्वनि वर्जिते कर्मणि द्वितीयाचतुर्थ्यौ भवत । ग्राम गच्छति । ग्रामाय गच्छति ।

१ कर्मक्रिया प्रोक्तवन्त कर्मकारकमभिधीयमाना इत्यर्थ ।

नगरं व्रजति । नगराय व्रजति । इत्यादि । चेष्टायामिति किं । मनसा मेरुं गच्छति । मनसा स्वर्गं गच्छति । अनध्वनीति किं । अध्वानं गच्छति । गत्यर्थानामिति किं । पन्थानं पृच्छति ।

**मन्यकर्मणि चानादरेऽप्राणिनि ॥ ३९३ ॥** प्राणिगणवर्जिते मन्यतेः कर्मणि द्वितीयाचतुर्थ्यौ भवतः अनादरे गम्यमाने । न त्वा तृणं मन्ये । न त्वां तृणाय मन्ये । न त्वां बुसं मन्ये । न त्वां बुसाय मन्ये । इत्यादि । अनादरे इति किं । अश्मानं दृषदं मन्ये । पाषाणं रत्नं मन्ये । अप्राणिनीति किं । न त्वा नावं मन्ये । न त्वामन्नं मन्ये । न त्वां काकं मन्ये । न त्वां शुकं मन्ये । न त्वां शृगालं मन्ये । नौ अन्न काक शुक शृगाला एते प्राणिनो वैयाकरणजनानां । इह स्यादेव न त्वां श्वानं मन्ये । न त्वां शुने मन्ये ॥ कस्मिन्नर्थे तृतीया ? करणे तृतीया । किं करणं ?

**येन क्रियते तत्करणम् ॥३९४॥** येन क्रियते तत्कारकं करणसंज्ञं भवति । दात्रेण लुनाति । कराभ्यां हन्ति । बाणैर्विध्यति ।

**दिवः कर्म च ॥ ३९५ ॥** दिवधातोः प्रयोगे करणे द्वितीया भवति । अक्षान् दीव्यति । अक्षैर्दीव्यतीत्यर्थः ।

**तृतीया सहयोगे ॥ ३९६ ॥** सहार्थेन योगे लिङ्गात्तृतीया भवति । पुत्रेण सह आगतः । त्यागसत्ताभ्यां सार्धं विराजते । शौर्यगुणैः साकमेधते यशः । इत्यादि

**हेत्वर्थे ॥ ३९७ ॥** हेत्वर्थे वर्तमानाल्लिङ्गात्तृतीया भवति । अन्नेन सेवते । धनेन कुलं । विद्यया यशः ।

**कुत्सितेऽङ्गे ॥ ३९८ ॥** कुत्सितेऽङ्गे वर्तमानाल्लिङ्गात्तृतीया भवति । अक्ष्णा काणः । पादेन खञ्जः । अक्षि काणमस्येति प्रधानत्वात्प्रथमैव ।

**विशेषणे ॥३९९॥** विशेषणे वर्तमानाल्लिङ्गात्तृतीया भवति ।

श्लोकः ।

शिक्षया वटुमद्राक्षीत् श्वेतच्छत्रेण भूपतिम् ।
केशवं शंखचक्राभ्यां त्रिभिर्नेत्रैः पिनाकिनम् ॥

**कर्तरि च ॥ ४०० ॥** कर्तरि च कारके वर्तमानाल्लिङ्गात्तृतीया भवति। देवदत्तेन कृतं। यज्ञदत्तेन भुक्तं। छात्रेण हन्यते। सुराभ्यां युध्यते। सुजनैः क्रियते।

**तुल्यार्थे षष्ठी च ॥ ४०१ ॥** तुल्यार्थे योगे लिङ्गात् षष्ठी तृतीया च भवति। देवदत्तस्य तुल्यः। देवदत्तेन तुल्यः। देवदत्तस्य समानः। देवदत्तेन समानः। इत्यादि। कस्मिन्नर्थे चतुर्थी? सम्प्रदानकारके चतुर्थी। किं सम्प्रदानं?

**यस्मै दित्सा रोचते धारयते वा तत्सम्प्रदानम् ॥ ४०२ ॥** यस्मै दातुमिच्छा यस्मै रोचते यस्मै धारयते वा तत्कारकं सम्प्रदानसंज्ञं भवति। ब्राह्मणाय गां ददाति। देवदत्ताय रोचते मोदकः। यज्ञदत्ताय धारयते शतं। विष्णुमित्रः यतिभ्यो दानं ददाति। देवाय रोचते हविः। मोक्षाय ज्ञानं धारयते। पुण्यार्थे चतुर्थी भवति नान्यत्र। राज्ञो दण्डं ददाति न तत्र पुण्यं। पुनरागमने षष्ठी। रजकस्य वस्त्रं ददाति।

**नमःस्वस्तिस्वाहास्वधालंवषड्योगे चतुर्थी ॥४०३॥** नम आदिभिर्योगे लिङ्गाच्चतुर्थी भवति। नमो देवाय। स्वस्ति जगते। स्वाहा हुताशनाय। स्वधा पितृभ्यः। अलं मल्लाय प्रतिमल्लः। शक्तो मल्लाय प्रतिमल्लः। वषडिन्द्राय। स्वाहा स्वधा वषट् दाने॥

**तादर्थ्ये ॥ ४०४ ॥** तदर्थभावे द्योत्ये लिङ्गाच्चतुर्थी भवति। मोक्षाय तत्त्वज्ञानं भुक्तिप्रदानाभ्यां धनं। गुणेभ्यः सत्संगतिः।

श्लोकः ।

संयमाय श्रुतं धत्ते नरो धर्माय संयमम् ।
धर्मं मोक्षाय मेधावी धनं दानाय भुक्तये ॥ १ ॥

**तुमर्थाच्च भाववाचिनः** ॥ ४०५ ॥ तुमःसमानार्थाद्भावाचिप्रत्ययान्ताल्लिङ्गाच्चतुर्थी भवति । भाववाचिनश्चेति वक्ष्यति। पाकाय व्रजति । पक्तये व्रजति । पचनाय व्रजति । पक्तुं व्रजति इत्यर्थः ॥ कस्मिन्नर्थे पञ्चमी? अपादाने पञ्चमी । किमपादानं?

**यतोऽपैति भयमादत्ते तदपादानम्** ॥४०६॥ यस्मादपैति यस्माद्भयं भवति यस्मादादत्ते वा तत्कारकमपादानसंज्ञं भवति । वृक्षात्पर्णं पतति । व्याघ्राद्बिभेति । उपाध्यायादादत्ते विद्यां। इत्यादि ।

**ईप्सितं च रक्षार्थानाम्** ॥ ४०७ ॥ रक्षार्थानां धातूनां प्रयोगे ईप्सितमनीप्सितं च तत्कारकमपादानसंज्ञं भवति । यवेभ्यो गां रक्षति । गौः यवात् रक्षति । गां निवारयतीत्यर्थः । पापात्पातु भगवान् । रोगकोपाभ्यां निवारयति मनः । अहिभ्य आत्मानं रक्षति ।

**पर्यपाङ्योगे पञ्चमी** ॥ ४०८ ॥ परि अप आङ् योगे लिङ्गात्पञ्चमी भवति । इहापपरी वर्जने । आङ् मर्यादाभिविध्योः । परिपाटलिपुत्राद्वृष्टो देवः । अपत्रिगर्तेभ्यो वृष्टो देवः । आपाटलिपुत्राद्वृष्टो देवः ।

**दिगितरर्तेऽन्यैश्च** ॥ ४०९ ॥ दिग् इतर ऋते अन्य एभिर्योगे वर्तमानाल्लिङ्गात्पञ्चमी भवति । पूर्वोग्रामात् । उत्तरोग्रामात्। इतरोदेवदत्तात् । ऋते धर्मात् कुतः सुखं । अन्योदेवदत्तात् ।

**पृथङ्नानाविनाभिस्तृतीया वा** ॥ ४१० ॥ पृथक् नाना विना एभिर्योगे लिङ्गात्तृतीयापञ्चम्यौ भवतः । पृथक् देवदत्तेन। पृथग्देवदत्तात् । नाना देवदत्तेन । नाना देवदत्तात् । विना देवदत्तेन विना देवदत्तात् ।

**हेतौ च** ॥ ४११ ॥ हेतौ च वर्तमानाल्लिङ्गात्पञ्चमी भवति । कस्माद्धेतोः समागतः । अग्निमानयं धूमवत्त्वात् । अनित्योऽयं कृतक-

त्वात् । कस्मिन्नर्थे षष्ठी? स्वाम्यादौ षष्ठी । के स्वाम्यादयः? स्वामी सम्बन्धः समीपः समूहः विकारः अवयवः स्व इति स्वाम्यादयः । देवदत्तस्य स्वामी । देवदत्तस्य वस्त्रं । पर्वतस्य समीपं । हंसानां समूहः । क्षीरस्य विकारः । देवदत्तस्य बाहू । यज्ञदत्तस्य शिरः । विष्णुमित्रस्य स्वं ।

**स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः षष्ठी च ॥४१२॥** स्वाम्यादिभिर्योगे लिङ्गात्षष्ठी सप्तमी च भवति । गवां स्वामी । गोषु स्वामी । गवामीश्वरः । गोष्वीश्वरः । गवामधिपतिः । गोष्वधिपतिः । गवां दायादः । गोषु दायादः । गवां साक्षी । गोषु साक्षी । गवां प्रतिभूः । गोषु प्रतिभूः । गवां प्रसूतः । गोषु प्रसूतः ।

**निर्धारणे च ॥ ४१३ ॥** निर्धारणे चार्थे लिङ्गात्षष्ठी सप्तमी च भवति । जातिगुणक्रियाभिः समुदायस्य एकदेशपृथक्करणं निर्धारणं । पुरुषाणां क्षत्रियः शूरतमः । पुरुषेषु क्षत्रियः शूरतमः । गवां कृष्णा गौः सम्पन्नक्षीरा । गोषु कृष्णा गौः सम्पन्नक्षीरा । गच्छतां धावन्तः शीघ्राः । गच्छत्सु धावन्तः शीघ्राः । इत्यादि ।

**षष्ठी हेतुप्रयोगे ॥४१४॥** हेतोः प्रयोगे लिङ्गात्षष्ठी भवति । अध्ययनस्य हेतोर्वसति । अन्नस्य हेतोर्वसति ।

**स्मृत्यर्थकर्मणि ॥ ४१५ ॥** स्मरणार्थानां धातूनां प्रयोगे वर्तमानाल्लिङ्गात् कर्मणि षष्ठी भवति । उत्तरत्र नित्यग्रहणादिह विकल्पो लभ्यते । मातुः स्मरति । मातरं स्मरति । पितुरध्येति । पितरमध्येति । इत्यादि ।

**करोतेः प्रतियत्ने ॥ ४१६ ॥** करोतेः प्रतियत्ने गम्यमाने लिङ्गात्कर्मणि षष्ठी भवति । सतो विशेषाधानं प्रतियत्नः । एधोदकस्योपस्कुरुते । एधोदकमुपस्कुरुते । इत्यादि ॥

**हिंसार्थानामज्वरेः ॥ ४१७ ॥** हिंसार्थानां ज्वरवर्जितानां धातूनां प्रयोगे कर्मणि षष्ठी भवति। चौरस्य प्रहन्ति। चौरं प्रहन्ति । चौर-

स्योत्क्राथयति । चौरमुत्क्राथयति । चोरस्य पिनष्टि । चौरं पिनष्टि । रुजो भङ्गे । चौरस्य रुजति । चौरं रुजति । इत्यादि । अज्वरीति किं । चौरं ज्वरयति कर्कटी । चौरस्य सन्तापयतीत्यर्थः ।

**कर्तृकर्मणोः कृति नित्यम् ॥ ४१८ ॥** कर्तृकर्मणोरर्थयो- र्नित्यं षष्ठी भवति कृत्प्रत्यययोगे । भवत आसिका । भवतः शायिका । भुवनस्य स्रष्टा । पर्वतानां भेत्ता । तत्वानां ज्ञाता । इत्यादि ।

**न निष्ठादिषु ॥ ४१९ ॥** कर्तृकर्मणोरर्थयोः षष्ठी न भवति निष्ठादिषु परतः । के निष्ठादयः । क्तक्तवत् । शन्तृङ् । आनश् । क्वंसु कान किं कंसु उदन्तु उकञ् क्त्वा तुम् भविष्यदर्थे वुण् आवश्यकाधमर्ण्ययोर्णिन् अव्यय तृण् इत्येवमादयः । देवदत्तेन भुक्तं- मोदनं । त्वया कृतः कटः । देवदत्त ओदनं भुक्तवान् । देवदत्त कृतवान् कटं । इत्यादि । कस्मिन्नर्थे सप्तमी ? अधिकरणे सप्तमी । कि- मधिकरणं ?

**य आधारस्तदधिकरणम् ॥ ४२० ॥** य आधारस्त- त्कारकमधिकरणसंज्ञं भवति । स आधारस्त्रिविधः । औपश्लेषिको वैषयिकोऽभिव्यापकश्चेति । कटे आस्ते काकः । औपश्लेषिकोऽयं । करयोः कङ्कणं । दिवि देवाः । वैषयिकोऽयम् । तिलेषु तैलं । अभिव्यापकोऽयं ।

**कालभावयोः सप्तमी ॥ ४२१ ॥** कालभावयोर्वर्तमाना- ल्लिङ्गात्सप्तमी भवति । काले शरदि पुष्यन्ति सप्तच्छदाः । भावे गोषु दुह्यमानासु गतः ।

**अधिशीङ्स्थासां कर्म ॥ ४२२ ॥** अधिपूर्वाणां शीङ्स्था आसु इत्येतेषां प्रयोगे अधिकरणे द्वितीया भवति । ग्राममधिशेते । ग्राममधितिष्ठति । ग्राममध्यास्ते । ग्रामे आस्त इत्यर्थः ।

**उपान्वध्याङ्वसः ॥ ४२३ ॥** उप अनु अधि आङ्

१ आध्रियन्ते क्रिया यस्मिन्नित्याधारः ।

पूर्वेभ्यः वसु निवास इत्येतस्य धातोः प्रयोगे अधिकरणे द्वितीया भवति । ग्राममुपवसति । ग्राममनुवसति । ग्राममधिवसति । ग्राममावसति । ग्रामे वसतीत्यर्थः ।

**सति च ॥ ४२४ ॥** सत्यर्थे वर्तमानाल्लिङ्गात्सप्तमी भवति । दाने सति भोगः । ज्ञाने सति मोक्षः । इत्यादि ।

**निमित्तात्कर्मणि ॥ ४२५ ॥** निमित्तभूताल्लिङ्गात्सप्तमी भवति कर्मणि परे ।

श्लोकाः ।

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥ १ ॥
मुक्तौ चित्तसमभ्येति स्वमुक्त्योर्जिनमर्चति ।
गुणेषु गुरुमाप्नोति गोपः पयसि दोग्धि गाम् ॥ २ ॥
संप्रदानमपादानं करणाधिकरणे तथा ।
स्वाम्यादिकर्म कर्ता च सेयं षट् कारिकी मता ॥ ३ ॥

इति कारकप्रकरणं समाप्तम् ।

---

## अथ समास उच्यते ।

पान्तु नो नेमिनाथस्य पादपद्मारुणांशवः ।
यस्य पादौ समानम्य नीतीभूता जगज्जनाः ॥ १ ॥

समासः क्रमः ।

**नाम्नां समासो युक्तार्थः ॥ ४२६ ॥** नाम्नां युक्तार्थः समासो भवति ।

श्लोकत्रयमाह ।

वस्तुवाचीनि नामानि मिलितायुक्तमुच्यते ।
समासाख्यं तदेतत्स्याचद्वितीतपचिरिव च ॥ १ ॥

१ हरेद हरीति पयन्ता.

**चकारवहुलो द्वन्द्वः सचासौ कर्मधारयः ।**
**यत्र द्वित्वं बहुत्वं च स द्वन्द्व इतरेतरः ॥ २ ॥**
**पदयोस्तु पदानां वा विभक्तिर्यत्र लुप्यते ।**
**स समासस्तु विज्ञेयः कविभिः परिकीर्तितः ॥ ३ ॥**

स चतुर्विधः । तत्पुरुषवहुब्रीहिद्वन्द्वाव्ययीभावभेदात् । पुनरुत्तरपदार्थप्रधानस्तत्पुरुषः । अन्यपदार्थप्रधानो बहुव्रीहिः । सर्वपदार्थप्रधानो द्वन्द्वः । पूर्वोव्ययपदार्थप्रधानोऽव्ययीभावः। इति चतुर्विध। स च यथाक्रमं प्रदर्श्यते । सुखं प्राप्तः । गुणान् आश्रित इति स्थिते॥

श्लोकः ।

**विभक्तयो द्वितीयाद्या नाम्ना परपदेन तु ।**
**समस्यन्ते समासो हि ज्ञेयस्तत्पुरुषः स च ॥ १ ॥**

द्वितीयादि विभक्त्यन्तं पूर्वपदं नाम्ना परपदेन सह यत्र समस्यते स समासस्तत्पुरुषसंज्ञको भवति ।

**तत्स्था लोप्या विभक्तयः ॥ ४२७ ॥** तस्मिन् समासे स्थिता विभक्तयो लोप्या भवन्ति ।

**प्रकृतिश्च स्वरान्तस्य ॥ ४२८ ॥** लुप्तासु विभक्तिषु स्वरान्तस्य व्यञ्जनान्तस्य च लिङ्गस्य प्रकृतिर्भवति । चकारात्क्वचित्सन्धिर्भवति ।

**कृत्तद्धितसमासाश्च ॥ ४२९ ॥** कृत्तद्धितसमासाश्च शब्दा लिङ्गसंज्ञा भवन्ति । सुखप्राप्तः । गुणाश्रितः । एवं ग्रामं गतः। ग्रामगतः । एवं स्वर्गं गतः।स्वर्गगतः । तृतीया—दध्ना संसृष्टः । दधिसंसृष्टः । धान्येन अर्थः । धान्यार्थः । यत्नेन कृतं । यत्नकृतं । चतुर्थी—कुबेराय बलिः । कुबेरबलिः।यूपाय दारु । यूपदारु । देवाय सुखं । देवसुखं । पञ्चमी—चौराद्भयं चौरभयं । ग्रामान्निर्गतः । ग्रामनिर्गतः। षष्ठी—चन्दनस्य गन्धः । चन्दनगन्धः । राज्ञः पुरुषः । राजपुरुषः । फलानां रसः । फलरसः । सप्तमी—व्यवहारे कुशलः । व्यवहारकुशलः । काम्पिल्ये सिद्धः । का-

न्मित्यसिद्धः । धर्मे नियनः । धर्मनियतः । एवं मोक्षसुखम् । संसारदुःखमित्यादि । विश्वमनिक्रान्तः । इति विग्रहे ।

**अत्यादयः क्रान्ताद्यर्थे द्वितीयया ॥४३०॥** अत्यादयः शब्दाः क्रान्ताद्यर्थे द्वितीयया सह यत्र समस्यन्ते स समासस्तत्पुरुषसंज्ञो भवति । उक्तार्थानामप्रयोगः । अव्ययानां पूर्वनिपातः । अतिविश्वः । कोकिलया अवक्रुष्टं वनमिति विग्रहः ।

**अवादयः क्रुष्टाद्यर्थे तृतीयया ॥ ४३१ ॥** अवादयः शब्दाः क्रुष्टाद्यर्थे तृतीयया सह यत्र समस्यन्ते स समासस्तत्पुरुषसंज्ञको भवति । स्वरो ह्रस्वो नपुंसके इत्यत्र योगविभागात् ।

**गोरप्रधानस्यान्तस्य स्त्रियामादादीनां च ॥४३२॥** अप्रधानस्यान्तस्य गोशब्दस्य तथाविधस्त्रियामादादीनां च ह्रस्वो भवति । इति ह्रस्वः । अवकोकिलं वनं । अवमयूरं । अध्ययनाय परिग्लान इति विग्रहः ।

**पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ॥ ४३३ ॥** पर्यादयः शब्दा ग्लानाद्यर्थे चतुर्थ्या सह यत्र समस्यन्ते स समासस्तत्पुरुषसंज्ञो भवति । पर्यध्ययनः । कौशाम्ब्या निर्गतः । मथुराया निर्गत इति विग्रहः ।

**निरादयो निर्गमनाद्यर्थे पञ्चम्या ॥४३४॥** निरादयः शब्दा निर्गमनाद्यर्थे पञ्चम्या सह यत्र समस्यन्ते स समासस्तत्पुरुषसंज्ञो भवति । गोरप्रधानस्यान्तस्य इत्यादिना ह्रस्वः । एवं निर्मयूरः । निष्कौशाम्बिः । दीर्घश्चारायणः । व्यासः पाराशर्यः । रामो जामदग्न्यः । क्षेमंकरः । शुभंकरः । प्रियंकरः । श्रियंमन्यः । भुवंमन्यः । ओजसाकृतं । अम्भसाकृतं । तमसाकृतं । परस्मैपदं । आत्मनेपदं । लोकान्मुक्तः । कृच्छ्रान्मुक्तः । अन्तिकादागतः । दूरादागतः । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः । शुनःपुच्छः ।
शुनो लाङ्गूलः । सरसिजं । पङ्केजं । स्तंबेरमः । कर्णेजपः ।

उरसिलोमा । इत्यत्र समासे कृते विभक्तिलोपे प्राप्ते तत्स्था लोप्या विभक्तयः । इत्यत्रस्थग्रहणाधिक्याल्लोपः क्वचिन्न भवति ।

**सप्तम्यास्तत्पुरुषे कृतिबहुलम् ॥ ४३५ ॥** कृदन्ते परे सप्तम्यास्तत्पुरुषे समासे बहुलमलुग्भवति । गेहे नर्दी । गेहे क्ष्वेडा । प्रवाहे मूत्रितं । भस्मनि हुतं । क्वचिद्विकल्पः । खेचरः । खचरः । वनेचरः । वनचरः । पङ्केरुहं । पङ्करुहं । सरसिजं । सरोजं ॥ विदुषां गमनं । दिवंगतः । इत्यादौ समासे कृते ।

**व्यञ्जनान्तस्य यत्सुभोः ॥ ४३६ ॥** लुप्तासु विभक्तिषु व्यञ्जनान्तस्य सुभोर्यदुक्तं तद्भवति । विद्वद्गमनं । द्युगतः । इत्यादि । नीलं च तदुत्पलं च । रक्तं च तदुत्पलं च । चशब्द. समुच्चयद्योतनार्थः । तच्छब्द एकाधिकरणद्योतनार्थः ।

**पदे तुल्याधिकरणे विज्ञेयः कर्मधारयः ॥ ४३७ ॥** यस्मिन् समासे द्वे पदे तुल्याधिकरणे भवतः स कर्मधारयो भवति ॥ भिन्नप्रवृत्तिनिमित्तयोः शब्दयोरेकाधिकरणे समावेशस्तुल्याधिकरणं । उक्तार्थानामप्रयोग इति तत् च शब्दनिवृत्तिः । विभक्तिलोपः । अत्र नीलं किमित्यपेक्षते उत्पलमपेक्षते । उत्पलं किमित्यपेक्षते नीलमपेक्षते । नीलोत्पलं । रक्तोत्पलं । एवं वीरश्चासौ पुरुषश्च वीरपुरुषः । शुक्लश्चासौ पटश्च शुक्लपटः । शोभना चासौ भार्या च शोभनभार्या । दीर्घा चासौ माला च दीर्घमाला ।

**कर्मधारयसंज्ञे तु पुंवद्भावो विधीयते ॥ ४३८ ॥** इति ह्रस्वः । इत्यादि ।

**संख्यापूर्वो द्विगुरिति ज्ञेयः ॥४३९॥** स एव कर्मधारयः संख्यापूर्वश्चेत् द्विगुरिति ज्ञेयः । स च त्रिविधः । उत्तरपदतद्धितार्थसमाहारभेदात् । पञ्चसु कपालेषु संस्कृत ओदनः । पञ्चकपाल ओदनः । दशसु गृहेषु प्रविष्टः । दशगृहप्रविष्टः । अष्टसु कपालेषु संस्कृतः पुरोडाशः ।

**अष्टनः कपालेषु हविषि ॥ ४४० ॥** अष्टन् शब्दस्य आत्वं भवति कपाले परे हविष्यभिधेये । अष्टाकपालः पुरोडाशः । अयमुत्तरपदद्विगुः । पञ्च च ते गावश्च पञ्चगावः । समासान्तर्गतानां वा राजादीनामदन्तता इति चत्वारश्च ते पन्थानश्च चतुष्पथाः । इति तद्धितपदार्थः । पञ्चानां फलानां समाहारः पञ्चफली । एवं त्रिलोकी । अकारान्तो द्विगुसमाहारो नद्यादौ पठ्यते पात्रादिगणं वर्जयित्वा । पात्रादिगण इति किं । त्रयाणां भुवनानां समाहारस्त्रिभुवनं । समाहारद्विगुरयं । त्रिभुवनं । त्रिभुवनाय । त्रिभुवनात् । त्रिभुवनस्य त्रिभुवने । सर्वत्रैकवचनं ।

**तत्पुरुषावुभौ ॥ ४४१ ॥** उभौ द्विगुकर्मधारयौ तत्पुरुषौ भवतः । इति तत्पुरुषसमासः । अब्राह्मणः । अनजः । कदश्च इत्यादि । इति कर्मधारयः । आरूढो वानरोऽयं वृक्षं । ऊढो रथो येन । उपहृतः पशुर्यस्मै । पतितं पर्णं यस्मात् । चित्रा गावो यस्य । वीराः पुरुषा यस्मिन्देशे । लम्बौ कर्णौ यस्य । दीर्घौ बाहू यस्य । धीराः पुरुषा यस्मिन् देशे । इति स्थिते ।

**स्यातां यदि पदे द्वे यदि वा स्युर्बहून्यपि ॥४४२॥** यत्र समासे द्वे पदे यदि वा स्यातां बहूनि पदानि वा स्युरन्यपदार्थे समस्यन्ते स समासो बहुव्रीहिर्भवति । आरूढवानरः । ऊढरथः । उपहृतपशुः । पतितपर्णः । चित्रगुः । वीरपुरुषोदेशः । लम्बकर्णः । दीर्घबाहुः । धीरपुरुषः । बहुपदानामपि । बहवो मत्ताः मातङ्गा यस्मिन् वने तत् बहुमत्तमातङ्गं वनं । बहूनि रसवन्ति फलानि यस्मिन् वृक्षे स बहुरसवत्फलो वृक्षः । व्यञ्जनान्तस्य यत्सुभोरिति न्यायात् अनुषङ्गलोपः । उपगता दश येषां ते उपगतदशाः । एवमासन्ना दश येषां ते आसन्नदशाः । अदूरा दश येषां ते अदूरदशाः । अधिका दश येषां ते अधिकदशाः । पुत्रेण सह आगतः सपुत्रः सहपुत्रः ।

**सहस्य सो बहुव्रीहौ वा ॥ ४४३ ॥** सहशब्दस्य सो

वा भवति बहुव्रीहौ समासे । जनकेन सह वर्तते इति सजनकः । एवं सधर्मः । जनन्या सहवर्त्तते इति स जननिः । एवं सवधुः । गोरप्रधानस्येत्यादिना ह्रस्वः । अव्ययानां पूर्वनिपातः ।

**युधि क्रियाव्यतिहारे इच्** ॥ ४४४ ॥ ग्रहणप्रहरणबाधके युद्धे क्रियाव्यतिहारे बहुव्रीहिसमासात् इच् भवति ।

**इच्पूर्वपदस्याकारः** ॥ ४४५ ॥ इचि परे पूर्वपदस्याकारो भवति । दण्डैश्च दण्डैश्च प्रवृत्तं युद्धं । दण्डादण्डि । एवं गदागदि । खड्गाखड्गि । केशाकेशि । मुष्टामुष्टि । कचाकचि । दक्षिणस्याः पूर्वस्याश्च दिशोर्यदन्तरालं सा विदिक् ।

**विदिक् तथा** ॥ ४४६ ॥ तथा विदिगभिधेये बहुव्रीहिर्ज्ञेयः। सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावः । दक्षिणपूर्वा । पश्चिमोत्तरा । दक्षिणपश्चिमा । उत्तरपूर्वा । इत्यादि । शुकश्च मयूरश्च । धवश्च खदिरश्च पलाशश्च । इति स्थिते ।

**द्वन्द्वः समुच्चयोर्नाम्नोर्बहूनां वाऽपि यो भवेत्** ॥४४७॥ द्वयोर्नाम्नोर्बहूनां वापि समुच्चयोर्द्वन्द्वो भवेत् । स च इतरेतरयोगः । समाहारश्चेति द्विप्रकारः ।

श्लोकः ।

**यत्र द्वित्वं बहुत्वं स च द्वन्द्व इतरेतरः ।**
**समाहारो भवेदन्यो यत्रैकत्वनपुंसके ॥**

द्वित्वेद्विवचनं । बहुत्वे बहुवचनं । शुकमयूरौ ॥ धवखदिरपलाशाः ।

**अल्पस्वरतरं तत्र पूर्वम्** ॥४४८॥ तत्र द्वन्द्वे समासे अल्पस्वरतरं पदं पूर्वं निपात्यते । प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ । एवं रथपदाती । तरग्रहणं द्विपदग्रहणार्थोऽन्यत्र शंखदुंदुभिवीणाः ।

**यच्चार्चितं द्वयोः** ॥४४९॥ तत्र द्वन्द्वे समासे द्वयोर्यदर्चितं तत्पूर्वं निपात्यते । वासुदेवार्जुनौ । शुककार्ष्णौ । हंसचक्रौ । देवदैत्यौ । क्वचिद्व्यभिचरति न । तथाहि ।

**न नरनारायणादिषु ॥ ४५० ॥** नरनारायणादिषु यदर्चितं पदं तत्पूर्वं न निपात्यते । नरश्च नारायणश्च नरनारायणौ । उमामहेश्वरौ । काकमयूरौ । इत्यादि ।

**मातुः पितर्यरश्च ॥ ४५१ ॥** तत्र द्वन्द्वे समासे पितरि उत्तरपदे मातृशब्दस्य ऋत अरादेशो भवति चकारादा च । माता च पिता च मातरपितरौ । मातापितरौ ।

**पुत्रे ॥ ४५२ ॥** पुत्रशब्दे उत्तरपदे द्वन्द्वविषये विद्यायोनिसम्बन्धिन ऋदन्तस्य आत्वं भवति । माता च पुत्रश्च मातापुत्रौ । एवं होतापुत्रौ । इति द्वन्द्वसमासः ॥ कुम्भस्य समीपं । अन्तरायस्य अभावः ।

**पूर्वं वाच्यं भवेद्यस्य सोऽव्ययीभाव इष्यते॥४५३॥** यस्य समासस्य पूर्वमव्ययं पदं वाच्यं भवेत्सोऽव्ययीभाव इष्यते । *अव्ययानां स्वपदविग्रहो नास्तीत्यन्यपदेन विग्रहः ।* इति वचनाद् उपनिरादेशौ भवतः । समीपस्य उपादेशः । अभावस्य निरादेशः । समासे कृते सति अव्ययानां पूर्वनिपातः ।

**स नपुंसकलिङ्गः स्यात् ॥ ४५४ ॥** सोऽव्ययीभावसमासो नपुंसकलिङ्गःस्यात् । अव्ययप्रधानत्वादलिङ्गे प्राप्ते वचनमिदं ।

**अव्ययीभावादकारान्ताद्विभक्तीनामपञ्चम्याः ॥ ४५५ ॥** अकारान्तादव्ययीभावाद्विभक्तीनां स्थाने अपञ्चम्या अम् भवति । उपकुंभं । निरन्तरायं । एवमुपगृहं । उपगेहं । उपगजं । उपराजं । उपच्छत्रं । उपवनं । उपनगं । उपदेवं । उपमायं । उपशालं । वादस्याभावो निर्वादं । मक्षिकाणामभावो निर्मक्षिकं । शीतस्यातिक्रमः अतिशीतं । एवमतिक्रमं । दिनंदिनं प्रति प्रतिदिनं । एवं प्रतिगृहं । प्रतिवृक्षं । प्रतिपुरुषं । प्रतिवनितं । प्रतिमासं । प्रतिवर्षं । प्रतिग्रामं । प्रतितटं । पुरुषस्य अनुगमः । अनुपुरुषं । एवमनुतटं । ग्रामस्यान्तः अन्तर्ग्रामं । अन्तर्घटं । अन्तर्गृहं । ग्रामस्य मध्ये

मध्येग्राम । एव मध्येवन । मध्येदिन । मध्येकूप । ग्रामस्य बहिर्बहि र्ग्राम । उपरिपर्वत । एव बहिर्वण अन्तर्वण ।

**वा तृतीयासप्तम्योः ॥ ४५६ ॥** अकारान्तादव्ययीभावा त्परयोस्तृतीयासप्तम्यो स्थाने अम् वा भवति । उपकुभ । उपकुभेन । उपकुभ । उपकुभाभ्यामित्यादि । निरन्तराय निरन्तरायेण । उपकुभ उपकुभे । उपकुभयो । इत्यादि । निरन्तराय निरन्तराये । अपञ्चम्या इति किं । उपकुभात् । निरन्तरायात् । इत्यादि । स्त्रीष्वधिकृत्य अधिकृत्यस्याधिरादेश । शक्तिमनतिक्रम्य अनतिक्रमस्य यथा देश । इत्यादिषु समासे कृते ।

**अन्यस्माल्लुक् ॥ ४५७ ॥** अकारान्तादन्यस्मादव्ययीभा वात्परासा विभक्तीना लुक् भवति । अधिस्त्रिय । यथाशक्ति । एवम धिगायत्रि । अधिसरस्वति । अधिभारति । अधिनदि । आत्मन अधि अध्यात्म । गुरोरनतिक्रमेण यथागुरु । वध्वा अनतिक्रमेण । यथावधु चम्वा अनतिक्रमेण । यथाचमु । गिरेरनतिक्रमेण । यथागिरि । वध्वा अनुगम । अनुवधु । अनुकण्डु । अनुनदि । अनुश्रि । अनु पट्टु । अनुवायु । अनुगुरु । अनुपितृ । अनुमातृ । अनुकर्तृ । क र्तु समीपमुपकर्तृ एवमुपगिरि । उपरवि । उपयति । उपगुरु । उपतरु । उपवधु । उपचमु । उपनदि । उपश्रि । उपगु । उपनु । कर्तु रतिक्रम । अतिकर्तृ । एवमतिरि । अतिगु । अतिनु ।

**समं भूमिपदात्योः ॥ ४५८ ॥** भूमिपदात्यो परयो सम त्व इत्येतस्य समित्यादेशो भवति । भूमे समत्व समभूमि । पदातीना समत्व सम पदाति ।

**सुविनिर्दुर्भ्यः स्वपिसूतिसमानाम् ॥४५९॥** सुविनि र्दुर्भ्य परस्य स्वपि सूति समाना सकारस्य षकारो भवति । सुषम विषम निष्षम दुष्षम । अपरसम । इत्यादि ।

**द्वन्द्वैकत्वम् ॥ ४६० ॥** समाहारद्वन्द्वस्यैकत्व नपुंसकलिङ्ग

स्यात् । अर्कश्च अश्वमेधश्च अर्काश्वमेधौ । तयोः समाहारः। अर्काश्वमेधं । एवं तक्षायस्कारं हंसमयूरं । मथुरापाटलिपुत्रं । पाणिपादं । बदरामलकं । सुखदुःखं । शुकश्च हंसश्च मयूरश्च कोकिलश्च शुकहंसमयूरकोकिलं । इत्यादि ।

**तथा द्विगोः** ॥४६१॥ तथा समाहारद्विगोरप्येकत्वं नपुंसकलिङ्गं च स्यात् ।

**समासान्तर्गतानां वा राजादीनामदन्तता ४६२**
समासान्तर्गतानां राजादीनामदन्तता अप्रत्ययो भवति वा समुच्चये । पञ्चानां गवां समाहारः पञ्चगवं । चतुर्णां पथां समाहारः चतुष्पथं ।

**न सूत्रे क्वचित्** ॥ ४६३ ॥ क्वचित्सूत्रे द्वन्द्वैकत्वं भवति नपुंसकलिङ्गत्वं न स्यात् । विरामव्यञ्जनादौ । एवं पचि वनि मिचि रुचि मुचि । इत्यादि ।

**पुंवद्भाषितपुंस्कानूङ्पूरण्यादिषु स्त्रियां तुल्याधिकरणे** ॥ ४६४ ॥ स्त्रियां वर्तमानं भाषितपुंस्कं अनूङन्तं पूर्वपदभूतं पुंवद्भवति स्त्रियां वर्तमाने तुल्याधिकरणे पूरण्यादिगणवर्जिते उत्तरपदे परे । शोभना भार्या यस्यासौ शोभनभार्यः । एवं दीर्घजङ्घभार्यः । इत्यादि । भाषितपुंस्कमिति किं । द्रोणीभार्यः । अनूङ् इति किम् । ब्रह्मबधूभार्यः । अपूरण्यादिष्विति किं । कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः। के पूरण्यादयः । पूरणी पञ्चमी कल्याणी मनोज्ञा सुभगा दुर्भगा स्वकान्ता कुब्जा वामना इत्यादि।

**संज्ञापूरणीकोपधास्तु न** ॥ ४६५ ॥ स्त्रियां वर्तमाना भाषितपुंस्कादनूङन्ताः संज्ञाः पूरणीप्रत्ययान्ताः कोपधा पूर्वपदभूताः पुंवद्रूपा न भवन्ति स्त्रियां वर्तमाने तुल्याधिकरणे पदे पूरण्यादिगणवर्जित उत्तरपदे परे । दत्ताभार्या यस्यासौ दत्ताभार्यः । पञ्चमीभार्यः । पाचिकाभार्यः । गोरप्रधानस्येत्यादिना ह्रस्वः । इत्यादि ।

**कर्मधारयसंज्ञे तु पुंवद्भावो विधीयते** ॥४६६॥ स्त्रि-

यां वर्तमाना भाषितपुंस्का अनूङन्ताः संज्ञापूरणीप्रत्ययान्ताः—कोपधा अपि कर्मधारयसमासे तु पुंवद्भवन्ति स्त्रियां वर्तमाने तुल्याधिकरणे पूरण्यादिगणवर्जित उत्तरपदे परे । शोभना चासौ भार्या च शोभनभार्या । एवं दत्तभार्या । पाचकभार्या । पञ्चमभार्या इत्यादि । भाषितपुंस्कमिति किं । खट्वावृन्दारिका । अनूङिति किं ब्रह्मबन्धूदारिका ।

**आकारो महतः कार्यस्तुल्याधिकरणे पदे ॥४६७॥** महत आकारः कार्यस्तुल्याधिकरणे पदे परे । महांश्चासौ देवश्च महादेवः । अन्तरङ्गत्वात् व्यञ्जनान्तस्य यत्सुभोरिति न्यायादनुषङ्गलोपश्च । प्रथमतोऽनुषङ्गस्य लोपे कृते सति पश्चात् येन विधिस्तदन्तस्येति न्यायात् तकारस्याकारः । सर्वत्र सवर्णे दीर्घः । एवं महापुरुषः । महापर्वतः । महादेशः ।

**नस्य तत्पुरुषे लोप्यः ॥४६८॥** तत्पुरुषसमासे नस्य नकारमात्रस्य लोप्यो भवति । न सवर्णः असवर्णः । न ब्राह्मणः अब्राह्मणः । एतल्लक्षणं तत्पुरुषस्यैव अन्येषां समासानां कथमिदं लक्षणं । न विद्यते घोषो ध्वनिर्येषां ते अघोषाः । तथा तत्पुरुषे इहोपलक्षणं। उपलक्षणं किम् । स्वस्य स्वसदृशस्य च ग्राहकमुपलक्षणं । सर्पिकाकेभ्यो रक्षति ।

**स्वरेऽक्षरविपर्ययः ॥ ४६९ ॥** तत्पुरुषे समासे नस्य अक्षरविपर्ययो भवति स्वरे परे । न अजः अनजः । एवमनर्थः । अनर्थः । अनकारः । अनिन्द्रः । अनुदकमित्यादि ।

**कोः कत् ॥ ४७० ॥** कुशब्दस्य कद्भवति तत्पुरुषे स्वरे परे । स्वपदविपदविग्रहो नाम्नीत्यन्यपदविग्रहः । कुत्सितश्चासौ अश्वश्च कदश्वः । कदन्नं । कदुष्टः । तत्पुरुष इति किम् । कुत्सिता उष्ट्रा यस्मिन्देशे स कूष्ट्रो देशः ।

**का त्वीषदर्थेऽक्षे ॥ ४७१ ॥** ईषदर्थे वर्तमानस्य कुशब्दस्य कादेशो भवति तत्पुरुषे समासे अक्षशब्दे च परे । कु ईषदक्षणं का-

लवणं। काम्लं। कामधुरं। काज्यं। काक्षीरं। कादधि। कु ईषत् तन्त्रं कातन्त्रम्। काक्षेण वीक्षते।

**कवश्चोष्णे ॥ ४७२ ॥** ईषदर्थे वर्तमानस्य कुशब्दस्य कवादेशो भवति तत्पुरुषे चोष्णशब्दे परे। चकारोऽत्र विकल्पार्थः। कु ईषच्च तत् उष्णं च कवोष्णं। कोष्णं। कु ईषदुष्णं।

**पथि च ॥ ४७३ ॥** तत्पुरुषसमासे कुशब्दस्य कादेशो भवति पथिन्शब्दे च परे। कुत्सितश्चासौ पन्थाश्च कापथः। समासान्तगतेत्यादिना अप्रत्ययः। नस्तु क्वचिन्नलोपः। इवर्णावर्णयोर्लोपः स्वरे प्रत्यये ये च। इति इकारलोपः।

**पुरुषे तु विभाषया ॥४७४॥** कुशब्दस्य कादेशो भवति वा तत्पुरुषे पुरुषशब्दे परे। कुत्सितश्चासौ पुरुषश्च कापुरुषः। कुपुरुषः।

**याकारौ स्त्रीकृतौ ह्रस्वौ क्वचित् ॥ ४७५ ॥** ईकारश्च आकारश्च याकारौ। याकारौ स्त्रीकृतौ ह्रस्वौ भवतः समासे क्वचिल्लक्षानुरोधात्। रेवत्याः मित्रं रेवतिमित्रं। एवं रोहिणिमित्रं। इष्टकानां चितं इष्टकचितं। इषीकाणां तूलं इषीकतूलं। इत्यादि।

**ह्रस्वस्य दीर्घता ॥ ४७६ ॥** ह्रस्वस्य दीर्घता भवति समासे क्वचिल्लक्ष्यानुरोधात्। दात्राकारौ कर्णौ यस्यासौ दात्राकर्णः। द्विगुणाकर्णः॥

**नहिवृतिवृषिव्यधिरुचिसहितनिरुहिषु क्विबन्तेषु प्रादिकारकाणाम् ॥ ४७७॥** प्रादीनां कारकाणामेषु क्विबन्तेषु दीर्घता भवति नह्यादिषु धातुषु परतः। उपानत्। उपावृत्। प्रावृट्। कर्मावित्। नीरुक्। प्रतीषट्। परीतत्। वीरुत्। इत्यादि।

**अनव्ययविसृष्टस्तु सकारं कपवर्गयोः ॥ ४७८ ॥** अनव्ययविसृष्टस्तु सकारमापद्यते कपवर्गयोः परतः। अयस्कारः। अयस्कल्पः। अयस्पाशः। अयस्काम्यति। अयस्काम इत्यादि। कारकल्पपाशकाम्यकेषु सकारो दृश्यते।

श्लोकः ।

बहुव्रीह्यव्ययीभावौ द्वन्द्वतत्पुरुषौ द्विगुः ।
कर्मधारय इत्येते समासाः षट् प्रकीर्तिताः ॥ १ ॥

इति समासः समाप्तः ।

## अथ तद्धितः किञ्चिदुच्यते ॥

कपटोरपत्यं । भृगोरपत्यं । विदेहस्यापत्यं । उपगोरपत्यं । इति स्थिते ।

**वाणपत्ये ॥ ४७९ ॥** षष्ठ्यन्तान्नाम्नोऽण्प्रत्ययो भवति वा अपत्ये अभिधेये । तस्येत्यादिना विभक्तिलोपः ।

**वृद्धिरादौ सणे ॥४८०॥** स्वराणामादिस्वरस्य वृद्धिर्भवति सणकारानुबन्धे तद्धिते परे । का वृद्धिः ।

**आरुत्तरे च वृद्धिः ॥ ४८१ ॥** अवर्ण ऋवर्ण इवर्ण उवर्णानामा आर् उत्तरे ऐ औ च द्वे सन्ध्यक्षरे वृद्धयो भवन्ति । प्रयोगात् । अवर्णस्य आकारवृद्धिः । ऋवर्णस्य आर् वृद्धिः । इवर्णस्य एकारस्य च ऐकारवृद्धिः । उवर्णस्य ओवर्णस्य च औकारवृद्धिः ।

**उवर्णस्त्वोत्वमापाद्यः ॥ ४८२ ॥** उवर्णस्तु ओत्वमापादनीयस्तद्धिते स्वरे ये च परे ।

**कार्याववावादेशावोकारौकारयोरपि ॥ ४८३ ॥** ओकारऔकारयोरवावौ आदेशौ कार्यौ भवतस्तद्धिते स्वरे ये च परे । कापटवः । भार्गवः । वैदेहः । औपगवः औपगवौ औपगवाः । इति पुरुषशब्दवत् । एवं यास्कः यास्कौ । वैदः वैदौ । आङ्गिरसः । कौत्सः । वासिष्ठः । गौतमः । ब्राह्मणः । ऐदम इत्यादि । पञ्चालस्यापत्यं ।

**रुद्रादण् ॥ ४८४ ॥** जनपदसमानजनामानः क्षत्रिया रुद्रा रुद्रशब्दात्परो अण प्रत्ययो भवति । अपत्येऽभिधेये ।

**इवर्णावर्णयोर्लोपः स्वरे प्रत्यये ये च ॥ ४८५ ॥** इवर्णावर्णयोर्लोपो भवति तद्धिते स्वरे ये च परे। पाञ्चालः । पञ्चालस्यापत्ये पाञ्चालौ । बहुत्वे ।

**रूढानां बहुत्वेऽस्त्रियामपत्यप्रत्ययस्य ॥४८६॥** रूढानां बहुत्वे विहितस्यास्त्र्यभिधेयस्य अपत्यप्रत्ययस्य लुग्भवति निमित्ताभावे नैमित्तिकस्याप्यभाव इति वृद्धेरपि लोपो भवति । पञ्चालाः । एवं विदेहाः । मगधाः । अङ्गाः । अस्त्रियामिति किं । पाञ्चाल्यः । वैदेह्यः । मागध्य इत्यादि । भृगोरपत्यं ।

**ऋषिभ्योऽण् ॥ ४८७ ॥** ऋषिनामभ्यः परोऽण् भवति अपत्येऽर्थे । भार्गवः । भार्गवौ । बहुत्वे ।

**भृग्वत्र्यङ्गिरस्कुत्सवसिष्ठगोतमेभ्यश्च ॥ ४८८ ॥** भृग्वादिभ्यो बहुत्वे विहितस्यास्त्र्यभिधेयस्य अपत्यप्रत्ययस्य लुग्भवति । भृगवः । अत्रयः । अङ्गिरसः । गोतमा इत्यादि । अस्त्रियामिति किं । भार्गवी । णटरागनुपन्यादिति नदादित्वादीप्रत्ययः । गर्गस्यापत्यं । इति स्थिते ।

**ण्य गर्गादेः ॥ ४८९ ॥** गर्गादेर्गणात् ण्यो भवति अपत्येऽभिधेये ।

*** इवर्णावर्णयोर्लोपः स्वरे प्रत्यये ये च ॥४९०॥** इवर्णावर्णयोर्लोपो भवति तद्धिते स्वरे ये च परे । गार्ग्यः गार्ग्यौ । वत्सस्यापत्यं वात्स्यः वात्स्यौ । पौरस्त्यः पौरस्त्यौ । बहुत्वे ।

**गर्गयस्कविदादीनां च ॥ ४९१ ॥** गर्गादीनां यस्कादीनां विदादीनां च बहुत्वे विहितस्य अस्त्र्यभिधेयस्य अपत्यप्रत्ययस्य लुग्भवति । गर्गाः । वत्साः । यस्काः । उभयत्र ण्योऽणश्च । उर्वाः । भरताः । विदाः । अञोऽलुक् । इत्यादि ।

**शुभ्रादेरायनण् स्मृतः ॥ ४९२ ॥** शुभ्रादेर्गणात् आयनण् प्रत्ययो भवति अपत्येऽर्थे गर्गादिभ्यश्च स्मृतः । अर्थान्तरादिबहुत्वे शुभ्र

एतत् स्मृतग्रहणाधिक्यात् । कुञ्जस्यापत्यं कौञ्जायन्य· कौञ्जायन्यौ । एवं ब्राध्नायन्यः ब्राध्नायन्यौ । स्त्रियां तु । कौञ्जायनी । नडादेस्तु । नाडायनः । चारायणः । मौञ्जायनः । शाकटायनः । बहुत्वे । कौञ्जायनाः कुञ्जस्यापत्यानि । एवं ब्राध्नायनाः ।

**स्त्र्यत्र्यादेरेयण् ॥ ४९३ ॥** स्त्रियामदादिभ्योऽत्र्यादेश्च एयण् भवति अपत्येऽभिधेये । विनताया अपत्यं वैनतेयः । एवं सौपर्णेयः । योषवेयः । कौन्तेयः । अत्रेरपत्यं आत्रेयः आत्रेयौ । बहुत्वे । अग्निसंज्ञायामेत्वमियादेशश्च । अत्रयः भृग्वत्र्यङ्गिरेत्यादिना अपत्यप्रत्ययस्य लुक् । सत्यामग्निसंज्ञायां इरेदुरोज्जसि । इत्येत्वं अयि । एवं सौभ्रेयः । गाङ्गेय· । भद्रबाहोरपत्यं ।

**ण्येऽकद्र्वादिस्तु लुप्यते ॥ ४९४ ॥** ण्ये प्रत्यये परे उवर्णो लुप्यते नतु कद्रूशब्दस्य । भाद्रबाहेयः । कामण्डलेयः । अकद्रु इति किम् । काद्रवेयः ।

**सर्वनाम्नः संज्ञाविषये स्त्रियां विहितत्वात् ॥ ४९५ ॥** सर्वनाम्न परः संज्ञाविषये रेयण् भवति अपत्येभिधेये । सर्वा काचित् स्त्री । सर्वाया अपत्यं सार्वेयः । इत्यादि ।

**इणतः ॥ ४९६ ॥** अकारान्तान्नाम्न इण् प्रत्ययो भवति अपत्येऽभिधेये । दक्षस्यापत्यं दाक्षिः । एवं दाशरथि· । आर्जुनि· । दैवदत्ति· । अस्यापत्यं इः इत्यादि ।

**बाह्वादेश्च विधीयते ॥४९७॥** बाह्वादेर्गणादिण् प्रत्ययो भवति अपत्येऽभिधेये । उपबाहोरपत्यमौपबाहविः । भाद्रबाहविः ।

**नस्तु क्वचित् ॥४९८॥** नस्य लोपो भवति क्वचित् लक्ष्यानुरोधात् ॥ उडुलोम्नोऽपत्यं औडुलोमिः । एवमाग्निशर्मिः ।

**मनोः षण्यौ ॥४९९॥** षष्ठ्यन्तान्मनुशब्दात्परौ षण्यौ प्रत्ययौ भवतः अपत्यार्थे । मनोरपत्यं मानुष· । मनुष्यः । मानव· । वाणपत्ये इति अण् भवति ।

**कुर्वादेर्ण्यः** ॥ ५०० ॥ कुर्वादेर्गणात् ण्य प्रत्ययो भवति अपत्येऽर्थे । कुरोरपत्यं कौरव्यः । वाणपत्ये इति अण् भवति । कौरव । गर्हस्यापत्यं गार्ह्य ।

**क्षत्राद्घः** ॥ ५०१ ॥ षष्ठ्यन्तात् क्षत्रशब्दात्परः इय प्रत्ययो भवति अपत्यार्थे । क्षत्रिय ।

**कुलादीनः** ॥ ५०२ ॥ कुलशब्दात्परः ईन प्रत्ययो भवति जातार्थे । कुले जात कुलीन । इत्यादि ।

रागान्नक्षत्रयोगाच्च समूहात्सास्य देवता ।
तद्वेत्त्यधीते तस्येदमेवमादेरणिष्यते ॥ १ ॥

रागात् अण् । कुसुम्भेन रक्तं कौसुम्भं । एवं हारिद्रं वस्त्रं । कौंकुम । माञ्जिष्ठ । लाक्षाय । नक्षत्रयोगात् । पुष्येण चन्द्रयुक्तेन युक्तः कालः ।

**पुष्यतिष्ययोर्नक्षत्रे** ॥ ५०३ ॥ नक्षत्रार्थे वर्तमानयोः पुष्यतिष्ययोर्यकारस्य लोपो भवति अणि परे । इति यकारलोप ।

*** मत्स्यस्य यस्य स्त्रीकारे ईये चागस्त्यसूर्ययोः ॥** ॥ ५०४ ॥ इति सूत्राय इति अनुवर्तन । पौष कालः । पौषो मास । पौषी रात्रि । पौषमहः । एवं तैषो मास । तैषी रात्रि । तैषमहः । चित्रया चन्द्रयुक्तया युक्तः कालः चैत्र । वैशाख । एवं ज्येष्ठ । आषाढ । श्रावण । भाद्रपद । आश्वयुज । कार्त्तिक । मार्गशिर । माघ । फाल्गुन । एवं सर्वत्र । समूहात् । युवतीनां समूहो यौवत । एवं हास । काक । क्षात्र । शौद्र । आर्ष । मार्ग । सास्य देवता । जिनो देवता अस्य इति जैन । एवं शैव । वैष्णव । ब्राह्मण । बौद्ध । कापिल । मार । ऐन्द्र । तद्वेत्ति । जिनं वेत्तीति जैन इत्यादि । छन्दो वेत्त्यधीते वा छान्दस । व्याकरणं वेत्त्यधीते वा वैयाकरण । भारत । *तस्येदं । सूरस्य इदं मास मार्गं । सौरं । कौमार । कुरुस्येदं कौरवं ।* पैत्र । पौरुष । यून इदं यौवन । एवमादिर्यस्येति गणो गृह्यते । चक्षुषा गृह्यते चाक्षुषं रूप । एवं श्रावणः शब्दः । रसनो रस । स्पर्शनं स्पार्श ।

दृषदि पिष्टा दार्षदाः सक्तवः । उलूखलेन क्षुण्णा औलूखलास्तण्डुलाः । अश्वैरुह्यते रथः आश्वो रथः । चतुर्भिरुह्यते चातुरं शकटं । चतुर्दश्यां दृष्टश्चातुर्दशो राक्षसः । त्रिविद्य एव त्रैविद्यः । पटोर्भावः पाटवं । लाघवं कौशल्यमित्यादि ।

**तेन दीव्यति संसृष्टं तरतीकण्चरत्यपि । पण्या-**
**च्छिल्पान्नियोगाच्च क्रीतादेरायुधादपि ॥ २ ॥**

तेन दीव्यति तेन संसृष्टं तेन तरति तेन चरत्यपि पण्यात् शिल्पात् नियोगाच्च क्रीतादेरायुधादपि । इतीकण् प्रत्ययो भवति । तेन दीव्यतीत्यत्र इकण् । अक्षैर्दीव्यति आक्षिकः । एवं गिरिणा दीव्यति गैरिकः । दाण्डिकः । तेन संसृष्टमित्यादि । दध्ना संसृष्टं दाधिकमोदनं । एवं क्षैरिकः । तात्त्रिकः । धार्मिकः । शार्ङ्गवेरिकः । सार्पिषिकः । लावणिकः । मारिचिकः । तेन तरतीत्यत्रापि । उडुपेन तरतीति औडुपिकः । एवं वाहित्रिकः । द्रोण्या तरतीति द्रौणिकः । गौपुच्छिकः । नावा तरतीति नाविकः । चरतीत्यत्रापि । शिबिकया चरतीति शैबिकिकः । एवं आश्विकः । औष्ट्रिकः । शृङ्गवेरेण चरतीति शार्ङ्गवेरिकः । पण्यात् । ताम्बूलं पण्यमस्य ताम्बूलिकः । एवमपिशब्दग्रहणात् यथाशिष्टप्रयोग्यं भवति । गन्धः पण्योऽस्येति गान्धिकः । एवं सार्पिषिकः । वास्त्रिकः । राजतिकः । लौहितिकः । शिल्पात् । मृदङ्गं शिल्पमस्येति मार्दङ्गिकः । एवं पाणविकः । शाङ्खिकः । काहलिकः । वैणिकः । त्रैवलिकः । वांशिकः । तालिकः । नियोगात् । शुल्कं नियोगो यस्येति शौल्किकः । एवं भाण्डागारिकः । माहानसिकः । प्रातीहारिकः । क्रीतादेः । सहस्रेण क्रीतं साहस्रिकं । एवं शातिकं । लाक्षिकं । सुवर्णेन क्रीतं सौवर्णिकं । आदिशब्दात् । लक्षेण युक्तो लाक्षिकः । दैवेन प्रवृत्तो दैविकः । कर्षापणेन अर्हतीति कार्षापणिकः । आयुधादपि । चक्रमायुधमस्येति चाक्रिकः । एवं कौन्तिकः । तौमरिकः । खाड्गिकः । क्रीतादेरित्यत्र ग्रहणात्तस्येति षष्ठ्यन्तान्नाम्नः परो वापत्ये तस्मिन्नर्थे इकण् प्रत्ययो भवति । अष्टस्य

वापः प्रास्थिकं क्षेत्रं । वाप इति कोऽर्थः । कुम्भस्य वापः कौम्भिकमित्यादि ।

**नावस्तार्ये विषाद्वध्ये तुलया सम्मितेऽपि च तत्र साधौ यः ॥ ५०५ ॥** नावस्तृतीयान्तात्तार्येऽर्थे विषात्तृतीयान्ताद्वध्येऽर्थे तुलया तृतीयान्तात्सम्मितेऽर्थेऽपि च तत्रेति सप्तम्यन्तात्साधावर्थे यः प्रत्ययो भवति । नावा तार्यमिदं नाव्यं । विषेण वध्यो विष्यः । तुलया सम्मितं तुल्यं । कर्मणि साधुः कर्मण्यः । अपि चेति वचनात् गिरिणा तुल्यो हस्ती गिरितुल्यः । तुल्यः सदृशः कुशलो योग्यो हितश्चेति साधुरुच्यते ।

**ईयस्तु हिते ॥ ५०६ ॥** हितार्थे ईयः प्रत्ययो भवति । वत्सेभ्यो हितो वत्सीयो गोधुक् । एवमश्वीयः । जनकेभ्यो हितो जनकीयः । जननीयः । त्वदीय. । मदीयः । युष्मदीयः ।

**तत्र जातस्तत आगतः ॥ ५०७ ॥** इत्यादिषु च ईयः प्रत्ययो भवति । शालायां जातः शालीयः । शालाया आगत. शालीयः ।

**यदुगवादितः ॥ ५०८ ॥** उवर्णान्ताद्गवादिभ्यश्च हितार्थे य- द्भवति । कृकवाकुभ्यो हितः कृकवाक्व्यः । वधूभ्यो हितो वधव्यः । गोभ्यो हितो गव्यः । पटुभ्यो हितः पटव्यः । हविर्भ्यो हिता हविष्यास्तण्डुलाः । गवादय इति के ‌.। गो हविस् अष्टका बर्हिस् मेधा स्रुच् इति गवादिगणः ।

**उपमाने वतिः ॥ ५०९ ॥** उपमानेऽर्थे वतिः प्रत्ययो भवति । राजेव वर्त्तते राजवत् । ब्राह्मणस्येव वृत्तमस्येति ब्राह्मणवत् । मथुरायामिव पाटलिपुत्रे प्रासादा मथुरावत् । देवमिव त्वां पश्यामि देववत् । इत्यादि । सर्वत्र द्रव्यगुणक्रियाभिः साम्यमुपमानमस्तीति वत् भवितव्यम् । द्रव्ये । देवदत्त इव धनवान् देवदत्तवत् । एवं कुबेरवत् । बलिवत् । गुणे । धीरीरिव गुणवान् धीरवत् । जम्भीरिव शास्त्रे जल्ववत् । अग्निरिव आग्न्यमाग्निवत् । श्रीखण्ड इव सुरभिः श्रीखण्डवत् । क्रियायां । ब्राह्मण इव वर्त्तते ब्राह्मणवत् । एवं पितावत् ।

**तत्वौ भावे ॥ ५१० ॥** भावेऽभिधेये तत्वौ भवतः । शब्दस्य प्रवृत्तिनिमित्तं भावो भवति । तप्रत्ययस्य स्त्रियां वृत्तिः । त्वप्रत्ययस्य नपुंसके वृत्तिः । पटस्य भावः पटता पटत्वं । एवं अश्वता अश्वत्वं । गोता गोत्वं । इति द्रव्यभावः । शुक्लस्य भावः शुक्लता शुक्लत्वं । रूपता रूपत्वं । रसता रसत्वं । ज्ञानता ज्ञानत्वं । सुखता सुखत्वं । इति गुणभावः । उत्क्षेपणता उत्क्षेपणत्वं । गमनता गमनत्वं । इति क्रियाभावः ।

**यण् च प्रकीर्तितः ॥ ५११ ॥** भावेऽभिधेये यण् प्रकीर्तितस्तत्वौ च । जडस्य भावो जाड्यं जडता जडत्वं । एवं ब्राह्मण्यं ब्राह्मणता ब्राह्मणत्वं ।

**अघुट् स्वरतद्धिते ये ॥ ५१२ ॥** तद्धिते ये परे अघुट्स्वरवत्कार्यं भवति । अघुट्स्वरादौ सेट्कस्यापि वन्सेर्वशब्दस्योत्वमित्युत्वं । विदुषां भावो वैदुष्यं । प्रकीर्तितग्रहणाधिक्यादन्यस्मिन्नर्थेऽपि यण् प्रकीर्तितस्तत्वौ च भवतः । ब्राह्मणस्य कर्म ब्राह्मण्यं ब्राह्मणता ब्राह्मणत्वं । पुनः पुनर्भावः पौनःपुन्यं ।

**तदस्यास्तीति मन्त्वन्त्विन् ॥५१३॥** तदिति प्रथमान्तादस्यास्तीत्येतस्मिन्नर्थे मन्तु वन्तु विन् इन् इत्येते प्रत्यया भवन्ति । गावोऽस्य सन्तीति गोमान् । आयुरस्यास्तीत्ति आयुष्मान् । इतिशब्दस्य विवक्षार्थत्वात् । अवर्णान्तात् अवर्णोपधात् मकारान्तात् मकारोपधात् धुडन्तात् अशिडन्तात् परो वन्त् प्रत्ययो भवति । अशिडन्तादित्युक्ते सति तद्वचनं सामान्यमेव । तत्र ह्कारो वर्जनीयः । अवर्णान्तात् । वृक्षोऽस्यास्तीति वृक्षवान् । शाल्यस्यास्तीति शाल्यवान् । इत्यादि । अवर्णोपधात् । तक्षाऽस्यास्तीति तक्षवान् । कर्माऽस्यास्तीति कर्मवान् । क्वचिन्नकारलोपः । मकारान्तात् । इदमस्यास्तीति इदंवान् । किमस्यास्तीति किंवान् । इत्यादि । मकारोपधात् । लक्ष्मीरस्यास्तीति लक्ष्मीवान् ।

१ भवतः अस्मात् अभिधानप्रत्ययावितिभावः ।

एवं धर्मवान् । इत्यादि । धुडन्तात् । विद्युदस्यास्तीति विद्युत्वान् । वर्गप्रथमा इत्यादिना तृतीये प्राप्ते सति । तसोर्न तृतीयो मत्वर्थे इत्यनेन सूत्रेण तृतीयत्वं न भवति । अशिडन्तादिति किं । आयुरस्यास्तीति आयुष्मान् ।

**असन्तमायामेधास्रग्भ्यो वा विन् ॥५१४॥** एभ्यः परो विन् प्रत्ययो वा भवति । यशोऽस्यास्तीति यशस्वी । पक्षे वन्त् यशस्वान् । अत्र सकारस्य दकारो विसर्गश्च न भवति । तपोऽस्यास्तीति तपस्वी । तपस्वान् । एवं तेजस्वी तेजस्वान् । धुटां तृतीयः । धुटां तृतीयो भवति घोषवति सामान्ये । लृवर्णतवर्गलसा दन्त्या इति न्यायात् सकारस्य दकारे प्राप्ते सति ।

**तसोर्न तृतीयो मत्वर्थे ॥५१५॥** तकारसकारयोस्तृतीयो मत्वर्थे न भवति। मत्वर्थे इति कोऽर्थः । अस्त्यर्थे । पश्चात् रेफसोर्विसर्जनीये प्राप्ते सकृद्बाधितो विधिर्बाधित एव सत्पुरुषवत् । मायास्यास्तीति मायावी मायावान् । मेधास्यास्तीति मेधावी मेधावान् । स्रगस्यास्तीति स्रग्वी स्रग्वान् । व्यञ्जनान्तस्य यत्सुभोरिति न्यायात् चवर्गदृगादीनां चेति गत्वमनेन न्यायेन अघोषे प्रथमः । वर्गप्रथमास्तृतीयान् ।

बहुलमिन् भवति ज्ञानमस्यास्तीति ज्ञानी । दण्डो यस्यास्तीति दण्डी । शिखास्यास्तीति शिखी । देवोऽस्यास्तीति देवी । इत्यादि ।

**तदस्य संजातं तारकादेरितच् ॥५१६॥** तदिति प्रथमान्तादस्य संजातमित्यस्मिन्नर्थे तारकादेराकृतिगणात् परः इतच् प्रत्ययो भवति । तारका संजाता अस्येति तारकितं नभः । एवं कण्टकितः करः । पल्लवितः वृक्षः ।

**संख्यायाः पूरणे डमौ ॥ ५१७ ॥** संख्यायाः पूरणेऽर्थे डमौ भवतः । 'एकादशपर्यन्तं संख्या' । 'ततः परमसंख्या' । 'असंख्यादेर्नान्ताया मो भवति तत्कथं वाशब्दात् । वाशब्दः कान्ते । वाणपत्ये इत्यत्र ।

**डानुबन्धेऽन्त्यस्वरादेर्लोपः** ॥ ५१८ ॥ डानुबन्धे प्रत्यये परे अन्त्यस्वरादेर्लोपो भवति । एकादशानां पूरण एकादश एकादशी एकादशं । द्वादश । अत्र आत्वं निपातः । त्रयोदश । अत्र त्रयस्तु निपातः । चतुर्दशः । पञ्चदशः । पञ्चमः । पञ्चमी । पञ्चमं । एवं सप्तमः । अष्टमः । नवमः । दशमः ॥ इत्यादि ।

**द्वेस्तीयः**॥५१९॥ द्वेस्तीयो भवति पूरणेऽर्थे । द्वयोः पूरणो द्वितीयः । द्वितीया । द्वितीयं ।

**त्रेस्तृ च** ॥५२०॥ त्रेस्तीयो भवति तृआदेशश्च पूर्णेऽर्थे । त्रयाणां पूरणस्तृतीयः । तृतीया तृतीयं ।

**अन्तस्थो डे पोः** ॥५२१॥ रेफपकारयोरन्तस्थो भवति डे परे । चतुर्णां पूरणश्चतुर्थः । चतुर्थी चतुर्थं ।

**तवर्गस्य षटवर्गाट्टवर्गः** ॥ ५२२ ॥ षकारटवर्गान्तात्परस्य तवर्गस्य टवर्गो भवति आन्तरतम्यात् । षण्णां पूरणः षष्ठः षष्ठी षष्ठं।

**कतिपयात्कतेः** ॥ ५२३ ॥ कतिपयात्कतेश्च पूरणेऽर्थे थो भवति डे परे । कतिपयानां पूरणः कतिपयथः । कतीनां पूर्णः कतिथ कतिपयथी । कतिथी । कतिपयथं । कतिथं ।

**विंशत्यादेस्तमट्** ॥ ५२४ ॥ विंशत्यादेस्तमट् प्रत्ययो भवति पूरणेऽर्थे । विंशतितमः । विंशतेः पूरणी विंशतितमी । विंशतितमं । त्रिंशतः पूरणः त्रिंशत्तमः । त्रिंशत्तमी । त्रिंशत्तमं । चत्वारिंशत्तमः । पञ्चाशत्तमः । उत्तरत्र नित्यग्रहणादिह विकल्पो लभ्यते उत्तरत्र नित्यग्रहणं कास्ते नित्यं शतादेरित्यत्र । यत्र संख्या विद्यते तत्र विकल्पेन तमट् भवति ।

**नोविंशतेरपि** ॥५२५॥ विंशतेरपि तेर्लोपो भवति डानुबन्धे प्रत्यये परे । अपिशब्दात् । अस्य लोपो भवति । विंशः । त्रिंशः चत्वारिंशः । पञ्चाशः ।

**नित्यं शतादेः** ॥५२६॥ शतादेर्गणात् पूरणेऽर्थे नित्यं तमट्

